SHRINEHARUCHARITAM

SHUKLA, BRAHMANAND






प्रकाशक
ब्रह्मानन्द शुक्ल, खुरजा
सर्वाधिकार लेखकायत्त
संस्करण १९६९

मूल्य
१२ ०० कपड़े की जिल्द पुस्तकालय संस्करण
१० ०० सादा जिल्द

वितरक
शारदा सदन
३८ राधाकृष्ण, खुरजा (उ० प्र०) भारत

मुद्रक
राजकिशोर शर्मा
सर्वोदय प्रेस,
२६४-जत्तीवाड़ा, मेरठ।
फोन ४३५२

# विषय-सूची

# प्रस्तावना

माननीयडाक्टरकर्णसिंह
पर्यटन नागरिकोड्डयन मन्त्री, भारतशासनस्य

आचार्यश्रीरूपानन्दशुक्लेन प्रणीतम् अष्टादशसर्गात्मकं "श्रीनेहरुचरितं" नाम महाकाव्यं मया स्वादं स्वादमवलोकितम् ।

अस्मिन् काव्ये लोकनायकस्य श्री जवाहरलालनेहरू-महोदयस्य जीवनमधिकृत्य कविवरेण श्री शुक्ल महोदयेन पद्यरचनायां स्वकीयं विशिष्टं कौशलं प्रदर्शितम् ।

अस्य महाकाव्यस्य नवमसर्गे द्वाविंशतितमे श्लोके श्रीशुक्लमहोदयेन पण्डितमहोदयस्य देशसेवाप्रतिज्ञाया या परिचर्या दत्ता, सा नूनम् वन्दनीया यथार्थं -

कदापि नाहं विरमामि सत्याद्
पथः, स चैवं करुणां करोतु ।
शरीरमेतन्मम देशसेवा-
रतस्य कामं विलयं प्रयातु ।। इति ।।

अपि च, यद्यपि संस्कृत वाङ्मये बहूनि काव्यानि सन्ति । परन्तु काव्येऽस्मिन् इयं विशिष्टता वरीवर्ति यद् अस्य नायकं प्रधानपात्रं वा विश्वं सर्वं एव जानाति । अत इदं काव्यम् अधीत्य पाठकाः कमपि लोकोत्तरमानन्दमनुभविष्यन्ति, इत्यत्र नास्ति सन्देहलेशोऽपि ।

वर्तमानसमये एतादृशानां काव्यग्रन्थानां महती आवश्यकता वर्तते । सर्वैर्हि देशवासिभिः अनुस्मृत्य अविरामं सम्पाद्यते ।

अहं भगवन्तं प्रार्थये यद् श्रीशुक्लमहोदयेन क्रियमाणेषु संस्कृतोन्नतिप्रयत्नेषु सफलता अस्य सदा सहायका भवेदिति ।

कर्णसिंह

दिनांक १६-१२-६६ (कर्णसिंह)

## प्राक्कथनम्

'श्रीगान्धिचरित'-रचना-समय एव मनस्यायात मन्महाविभूतेः श्रीवीरवरस्य नेहरो*र्जवाहरस्य चरितमवलम्ब्य महाकाव्यमेकं विरचितं स्यात् ।

तदनुरूपमेव 'महाकाव्य'-संज्ञया विलसितं काव्यमेतत् सहृदयानां सम्मुखे समुपाहितम् । अत्र लक्षण-ग्रन्थेषु प्रतिपादितानां महाकाव्य-लक्षणानां नाक्षरशः परिपालनं कृतम् । युगानुसारमेव महाकाव्य-सम्बन्धि-स्वरूपं हृदि निधायास्य रचना कृता ।

संस्कृते नवीनविषयानवलम्ब्य रचना प्रशस्ते न भवन्ति—इति योऽयमपवादोऽधुना प्रवर्तितस्तस्य निराकरणमपि यथाकथञ्चिदनेन सम्भविष्यतीति विश्वसिमि ।

अस्य प्रारम्भः २३.८.६८ दिनाङ्के पूर्तिश्च १४.११.६८ दिनाङ्के श्रीमता नेहरूमहाभागानां जन्मतिथावभूत् परमद्यावधि न प्रकाशितमित्यत्रापि भगवदिच्छैव प्रधानं निदानमिति मन्ये । अस्तु, १४.११.१९६९ तारिकायामस्य मुद्रणं प्रारब्धम् । अस्य मुद्रणकाले एव भारतशासनस्य केन्द्रीय-पर्यटन-नागरिकोड्डयनमन्त्रिभिः माननीयडाक्टरकर्णसिंहमहोदयैरस्यप्रस्तावना व्यरचीति कृतज्ञतामावहामि ।

इदं हिन्दी-रूपान्तरेण साकं प्रकाश्यते, येन संस्कृतापरिचिता अपि जना अस्य मूल्याङ्कनं कर्तुं क्षमा भवेयुः । टीकान्तरवदियमपि 'प्रियम्वदा'

*'नेहरू'—'नेहरुः' इति द्वयोरपि शब्दयोः प्रसिद्धत्वादस्माभिर्द्वयोरपि प्रयोगो विहितः ।

ऽभिधाना हिन्दी-टीका प्रियवरोन स्वमातुर्नाम्नैव व्यरचि । एतदर्थमहं स्वकीयं ज्येष्ठपुत्रं चि० कृष्णकान्तशुक्ल, एम० ए० साहित्याचार्यं, बरेली-कालेजे संस्कृत-विभागाध्यापकं शुभाशिषां राशिभिः सवर्धयामि ।

अस्य प्रकाशन-कर्मणि मम तृतीयपुत्रेण डा० रमाकान्तशुक्लेन, एम० ए०-पी-एच०डी०-साहित्याचार्येण दिल्ली विश्वविद्यालयस्य राजधानी-कालेजे हिन्दी विभागाध्यापकेन बहु प्रयतितमित्ययमपि प्रियवरः शुभाशीर्भिः सवर्ध्यते।

पाण्डुलिपि निर्माणादिकार्ये सहयोगार्थं स्वद्वितीयपुत्राय चिरायुषे उमाकान्तशुक्लाय, एम०ए०-साहित्याचार्याय, मुजफ्फरनगरस्थसनातनधर्मकालेजे संस्कृत-प्राध्यापकाय किञ्च चतुर्थसूनवे चिरञ्जीविने विष्णुकान्तशुक्लाय, एम० ए०-साहित्याचार्याय, सहारनपुरस्थजे०वी०जैनकालेजे हिन्दी प्राध्यापकायापि मम शुभाशीर्वादः । प्रार्थये च श्रीमन्तं परमेश्वरं यदिमे चत्वारोऽपि भ्रातरः सुरभारतीसपर्यायां सर्वात्मनाऽऽत्मानं विनियोजयन्तः सर्वदा सुखिनो भवेयुः ।

डाक्टर श्रीरमेशचन्द्रशुक्लमहाभागैर्यदपि लिखितम् तत्कृते किं कथयामि ? मयराष्ट्रस्थ-सर्वोदयमुद्रणालयाधिपतये चि० राजकिशोरशर्मणेऽपि मम शुभाशीर्वादः येनाध्यवसायपूर्वकं मुद्रणं सम्पादितम् ।

येषा पावन-प्रेरणयाऽस्य पूर्तिरभूत् सर्वैऽभिनन्दनीया । कीदृशमिदम् ? अत्र तु सहृदया एव प्रमाणभूता ।

'हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ।'

२४-१२-१९६६ ई०

# हिन्दी-अनुवाद के संबन्ध मे

प्रस्तुत महाकाव्य १४ नवम्बर १९६८ (को नेहरूजी की ७९वी जन्म तिथि) को ही सम्पूर्ण हो चुका था। पूज्य पिताजी ने मुझे उसे हिन्दी-अनुवाद के साथ प्रेस कापी तैयार करने के लिए दे दिया था, जो कि मेरे आलस्य के कारण अब तक तैयार न हो सकी, और अब, जबकि वे गम्भीर रूप से रुग्ण हैं, यह प्रकाशित हो रहा है। इस ऐतिहासिक महाकाव्य की रचना उन्होने जिन परिस्थितियो मे की थी, उनमे इसकी समाप्ति सचमुच ईश्वर कृपा से ही सम्भव हो सकी।

श्रीनेहरूजी पर ससार की विभिन्न भाषाओं मे अनेक ग्रन्थ लिखे गये हैं, परन्तु इसमे, तुलसी के राम की भांति, उनका जो रूप प्रतिष्ठित हुआ है वह इसका अपना ही वैशिष्ट्य है। ऐतिह्य मूल मे होते हुए भी काव्य काव्य ही होता है। सस्कृत के ऐतिहासिक महाकाव्यो की परम्परा मे अश्लील एव अतिरञ्जित शृङ्गार वर्णनों से रहित तथा राष्ट्रीय-भावना से ओतप्रोत इस कृति को महत्वपूर्ण स्थान प्राप्त होगा, ऐसा विश्वास है।

वैसे तो इसे सस्कृत-हिन्दी टीकाओं के साथ प्रकाशित करने का विचार था, परन्तु वह कार्य समय एव साधन सापेक्ष था, अत सम्प्रति इस हिन्दी अनुवाद के साथ ही प्रकाशित किया जा रहा है। अनुवाद और वह भी रससिद्ध कविता का, स्वय मे एक बडी समस्या है, फिर भी मूल रचना से लोग अधिकाधिक परिचित हो सकें इसलिए अनुवाद का सहारा लिया ही जाता है। प्रस्तुत अनुवाद यद्यपि अधिकाशत शाब्दिक ही है तथापि जहाँ

अनिवार्य हुआ है वहाँ भावानुवाद भी दिया गया है। कोष्ठकों के अन्तर्गत अधिकांशतः सङ्गतिपरक वाक्य रखे गये हैं। 'आदरार्थे बहुवचनम्' को आदर्श बनाया गया है।

अपने पिताजी की किसी कृति का अनुशीलन स्वयं में एक अद्भुत अनुभव है, फिर अपनी पूज्या माताजी के नाम के आधार पर की गई इस 'प्रियम्वदा' हिन्दी-विवृति से मुझे एक साथ ही मातृ-पितृ-मूर्ति की वाङ्मयी अर्चना का सौभाग्य प्राप्त हो गया है।

—कृष्णकान्त शुक्ल

# नेहरूचरितप्रणेतृपरिचयः

डॉ० रमेशचन्द्रशुक्लः

एम० ए०, पी एच० डी०, साहित्य सांख्ययोगाचार्य
आचार्य संस्कृत विभागे, अलीगढ़स्थश्रीवार्ष्णेयकालेजस्य ।

विद्यायां रमते हि यस्य धिषणा लग्न च चेतो हरौ
नित्य य सुरभारतीं नवनवा कृत्वा कृतीं सेवते ।
लक्ष्मी न्याय्यपथइच् य कविवर कर्तु क्षमा न च्युत
ब्रह्मानन्दमुदात्तभावविभव शुक्ल वय त नुम ॥

उत्तरप्रदेशस्य प्रतीच्ये भूभागे संस्कृत शिक्षाया विकासने, सांस्कृतिकस्य प्रकाशस्य प्रसारणे, देश भक्ति विभावितभावनाया उद्भावने च शुभयोगदान विदधतां विपश्चितामाचार्य श्रीपण्डितब्रह्मानन्दशुक्ल (प्रधानाचार्य, साहित्य-विभागाध्यक्षश्च श्रीराधाकृष्णसंस्कृतमहाविद्यालयस्य खुरजास्थितस्य) गौरवपूर्ण स्थानमधिकुरुते । ऋषीणा दिव्यां दृष्टिमलौकिकञ्च तेजो बिभ्राणोऽसौ सर्वास्वपि दिशासु समन्तादसामान्यमेवालोक विकिरन्नक्षत्रमिवाविर्भूय संस्कृत-समृतिमालोकितां विदधानो देद्युतीति ।

संस्कृत सेवमानस्याचार्यशुक्लस्य पञ्चचत्वारिंशद्वर्षव्यापी दीर्घं समयोऽतिक्रान्त । एतत्समयान्तराले स संस्कृतसरस्वत्या वन्दनीयां यां वरिवस्यां विहितवान् सास्ति बहुविधा । छात्राणामध्यापन, नवनवरचनानां विरचन, सतां सभासु प्रवचनानां ततेवितनन, श्रीमद्भागवतसुधाया. प्रवाहन, पत्र-पत्रिकाणां सम्पादन, विशाल विशालतराणां सम्मेलनानां समायोजन साहित्यिकगोष्ठीनां सञ्चालन, संस्कृत प्रचारणाभ्युत्थापनादिमहनीयमहानां कृते स्वस्य प्रदेशाभ्यावतारण भारतीयसंस्कृति मर्यादा रक्षणदम्भकार्यकलापानामाचरण, सत्यापरिग्रहादियम-स्वाध्यायतप प्रभृतिनियमानां परिपालन, भारतीकसां

हृदयघरिम्या उपरि राष्ट्रप्रेम-प्रवाहस्य सञ्चारणमित्येतदादिका. सन्ति तदीया *नानाविधा मर्पचितय । तस्य ताभिस्ताभि* सेवाभिर्देशोऽस्य विशेषेण च संस्कृत-संसार: प्रणतमस्तकीकृतोऽस्ति ।

तिथिदिवसादिनिश्चितावधिपरवर्तित्वादाचार्यश्रीब्रह्मानन्दशुक्लचरणानां जीवनस्य, न वस्तुतस्तदपि संस्कृतकवीना परम्पराया अपवाद, । इह "वस्तुत-स्तु *कवयो भवन्ति वसुधाकुटुम्बावलम्बिन । 'गुणा पूजास्थान'* मित्येतयोक्त्या गुणनिकुरम्बाविर्भावनमेव तेषा प्रधान प्राप्तव्यमित्यत: स्वदेशकालमधिकृत्य संस्कृतसंस्कृतिसमुपासकानामौदासीन्यमेव प्रायेण प्रतीतिपथमवतरतीति । कीर्ति-कलेवरा· कवय सार्वदिका , देशजातिव्यापिसम्प्रदायतो भिन्ना एव भवन्त्यत-स्तेषां महानुभावानाममरा कृतय एव परीक्षानिकषे स्फारीभवन्ति किं देशादिप-रीक्षणेनेति शम् [1]" इत्येषा तदीयैव नैजव्याहृति ।

काम संस्कृतपण्डितपुरन्दरस्य श्रीशुक्लस्य जनुस्तिथेर्ज्ञान कुटिलकाल-करालकार्पवशाद् भवतु नाम अस्मदविदित पर तत्प्रणीतमाहित्यन्तु समेषामपि सचेतसा विदितमेव सम्यक् । वेदाकाशग्रहशशिमितेशवीयाब्दस्य (१९०४ ई०) *प्रायेण प्रकाशसत्या मुजफ्फरनगरमण्डलान्तर्गतजरथलपुटभेदनेऽसावहीज्ज्वलि-*मित्याप्ता आचक्षते । पण्डितबदरीदत्तशुक्लस्तदीय पितामह , पण्डितमाईदयालुशुक्लश्च तत्पितोभावपि द्विजसमाजेऽतितरामादरणीयावभूताम् । 'तुलसादेवी' तस्य मातासीत् ।

श्रीशुक्लस्य शैशव तदीये मातामहालये मुजफ्फरनगरमण्डलाधिष्ठित— 'बेहडा मासा'—ग्रामे व्यत्यगात् ।

अस्माभिराचार्यशुक्लस्य विस्तृतपरिचय 'संस्कृतवैभव' नाम्नि आचार्य-श्रीब्रह्मानन्दशुक्लाभिनन्दनग्रन्थे प्रकाशित । अत्र केवल तद्रचनानां परिचय एव दिङ्मात्र दीयते । विस्तृतपरिचयार्थं 'संस्कृतवैभवम्' (पृ० १-३२) सुधीभि-र्विलोकनीयम् ।[2]

---

१ मृच्छकटिकम्, भूमिका, सं० १९५३, वाराणसी, मा० खेलाडी लाल एण्ड सन्स ।

२ संस्कृतवैभवम् (आचार्यश्रीब्रह्मानन्दशुक्लाभिनन्दनग्रन्थ ) सम्पा० डॉ० रमेशचन्द्रशुक्ल , १९६६ ई०, प्रकाशिका-संस्कृतपरिषदोऽभिनन्दनसमिति , अलीगढ़ ।

आदरणीयाचार्यकृता इमा मौलिक्यः कृतयोऽद्य साहित्य-संसृत्या गौरवं संवर्धयन्त्य. सशोभन्ते —१. श्रीगान्धिचरितम्, २. उद्‌बोधन, ३. मणिनिग्रह, ४. भारतसुषमा, ५. आश्वासनम्, ६. वस्त्रावतारः, ७. श्रीनेहरूचरितम् । सम्पादितेषु कृतव्याख्येषु च ग्रन्थेषु सन्त्यध स्थिता :—१. मृच्छकटिकम्, २. उत्तररामचरितम्, ३. सावित्र्युपाख्यानम्, ४. हर्षचरितम् ।

गान्धिचरितम्—अस्ति काव्यमिद चरितकाव्यम् । सदपि तच्चरितकाव्यं, राष्ट्रियभावनाभावितत्वान्मनोज्ञमन्यतम राष्ट्रियकाव्यम् । कविर्निसर्गतो राष्ट्रभक्त । स महात्मान गान्धिनमतो गेयत्वेन स्वकाव्ये परिगृह्णाति सश्रद्धम् । महात्मनश्चरितगानमेकतस्तु मानसेषु सर्वेषा पवित्रतामातन्वीत, अपरतस्तत् तत्र राष्ट्रियतां सञ्चारयेदित्येतद् विमृश्य, मन्येऽयं राष्ट्रदेवताक. कवि काव्यमिद व्यरचयत् । म० गान्धिनो जीवन विश्वजनीनत्वाद् व्यतिरिक्तं नान्यत् किमपि । तदीया राष्ट्रियभावना राष्ट्रान्तरवासकृता राष्ट्रियभावनेव न कामपि भौगोलिकीं सीमामभिव्याप्य विशेषेण समुज्जृम्भते । तस्या तु समग्रापि जगती माति । तदभिमतराष्ट्रियताया अस्त्यर्थो मानवताया सरक्षण, सम्पोषण, सर्वाङ्गीणतया समुन्मीलनञ्च । यो हि महात्मा तस्य देशस्य मानवो यस्य देशस्य मेधा सर्वमपि जगद् 'ब्रह्म' इत्येतद् व्यतिरिच्य नान्यत् किमपि मन्यते स महात्मा तां राष्ट्रियता कथमङ्गीकुर्तु शक्नुयात् यस्याम् 'अयं निज परो वा' इत्येषा हि विचारणा निषीदति । यथा कवेर्गेयो महात्मा सर्वगुणयुता बिभर्ति तथैव कविरपि गान्धिचरितस्य भारतीयाना कवीना तस्याम्परम्पराया सन्निविशते यस्या 'माताः भूमिः पुत्रोऽहं पृथिव्या' इत्येषा भव्या भावनानुस्रियते परिपूज्यते च । वर्णनीयस्य वर्णयितुश्चोभयोरपि एकविधस्यैव स्वभावस्य सन्निविष्टत्वात् गान्धिचरितं नाम काव्यमतितरां हृदयगमता गतमस्ति ।

पाठक काव्यमिदमध्येतु यदैव प्रारभते सदैव तस्य समक्षं मविलम्बं स्वदेशैकसर्वस्वः मविः शुक्लः—

"सुधोपमैर्दिव्यजलै. सदैव,
गङ्गादयो य परिपावयन्ति ।

श्रीशारदागीतयशः प्रशस्ति-
र्देशश्चिरं भातु स भारताख्यः ॥"

भूभुवने सर्वत्र तस्य देश उत्कृष्टतरीभूय स्व गरिमाणं विकिरन् सशो-भताभित्येतद्भक्तिभावभावितेन श्लोकेनोपश्लोकयन् देशमुपस्थितो भवति । स स्वकीयदेशमेव साक्षाद् नैजमिष्टदेवं मनुते; तद्विचारेणाभीष्टदेव एव तद्-देशो भूत्वा भुवि विभास्यतोऽसौ स्वदेशं मङ्गलमातनितुं प्रार्थयते—

"वाल्मीकिमुख्याः कवयो यदीयां
भूतां प्रभूतां गरयन्ति भूतिम् ।
वेदप्रभाभासुरभूसुराति-
र्देशः स नो मङ्गलमातनोतु ॥"

'आचारः परमो धर्मः' इति यद् धर्मशास्त्राण्यामनन्ति तत् नैजाचरणे परिणमयितुं कविर्जनतां, मन्ये, गान्धिनो मातुर्मुखेन समुपदिशति—

'आचारहीनजनजीवनपावनाय
वेदोऽपि नार्हतितमामिति वत्स विद्धि ।'

कवेर्मतेन देशसेविन एव जना महान्तो न चेतरे । स आह—

'ये मानवा देशदरिद्रतायाः मन्त्वं विघातुं सततं यतन्ते ।
स्वजीवनं पावनमेव कर्तुं जना महान्तो न मताः कथं ते ? ।"

पृथिव्यां तस्यैव मानवस्य जीवनं सफलं मन्तव्यं यदीयं जीवनं परसेवायां व्यत्येति-इत्येतस्मिन् आदर्शे राष्ट्रकविरयं श्रद्धाविभ्य निबध्नाति, अत स आह—

"यो मानवो नैव करोति सेवां, जीवेषु सर्वेषु च प्रेमभावं ।
किं तस्य भस्त्राहृतिशीलनेन जनस्य जातेन कुजन्मना वा ? ।"

कवि रेयो गान्धी अस्ति भगवद्भक्तः । स स्वदेशबान्धवानां विपद्-दशामसहमानः परमेशं याचते तां दशां दूरीकर्तुम्—

'परेश ! त्वरमाणमपि येहि वीर्यं
पौर्णापयस्त्व प्रथितोऽसि देवे ।
येषंवक्तुं हि वेत्सि किं मा
विपद्दशां भारतबान्धवानाम् ?"

इत्येतासु पङ्क्तिषु म०गान्धिनो हि जीवनस्य कर्म-परत्वमपि व्यक्ती-भवति। भगवद्भक्तः स एव श्रेष्ठो यो भगवति श्रद्धा निदधानः कर्मणः कदापि न विरमति। मानवस्य कर्तव्यं यदसौ कुर्वन्नेव कर्माणि जिजीविषेत्; कर्माणि च कर्तुं शक्तिं स परमात्मानं याचेत्। गान्धिनो जीवनमित्येतदेवोप-दिशति। कुशलकवेः कवितायामस्या गान्धिनस्तद्विधपावनजीवनस्य समी-चीनतया दर्शनं सञ्जायते।

उत्साहमन्तरेण जीवने मानवस्य न कस्यामपि क्रियायां प्रवृत्तं भवितुं शक्नोति। कार्ये विजय उत्साहाधीन इत्येतत् तथ्यमुन्मीलयन् कविराचष्टे—

"सोत्साहताऽस्ति विजयैकसेतुः।

अस्मदीये राष्ट्रेऽधुना सत्य-धर्माख्ययोर्गुणयोरभावो विलोक्यते। तद-भावाद्राष्ट्रं दिनानुदिनं ह्रासं प्रयाति। राष्ट्रोद्दिधीर्षूणां धर्मोऽयं यत् ते तथा यतेरन् यथा राष्ट्रमुत्कर्षं गच्छेत् इत्येतदेव कविरभिदधाति—

"सत्यधर्माभ्यां सकलार्थसिद्धिः।

अद्य सर्वत्र देशे वञ्चकता, क्षुत्क्षामकण्ठता, दुर्बलपरिपीडनशीलता च वीक्ष्यन्ते—देशस्येदमसद्रूपं कविं कदर्थयति, भृशं स काङ्क्षति—

"नैव वञ्चकता क्वापि, नापि क्षुत्क्षामकण्ठता।
न चापि दुर्बलाघातो मम देशे भवेत्क्वचित्॥"

तदेव कवेर्गान्धिचरितं वस्तुतोऽस्त्येकं राष्ट्रप्रेमप्रसारकं ललितं काव्यम्। काव्यस्य प्रसादप्रसन्नत्वात्, तत् सर्वसाधारणानामपि चेतःसु देशभक्ति-गङ्गां सञ्चारयति। एतद्विधानि काव्यानि नवतरुणानां चेतांस्यनायासेन संस्कृत-भाषांप्रति राष्ट्रभक्तिञ्च प्रति आकृष्य क्षमा-यनो देशः सानुरोधं तान्यपेक्षते।

उद्बोधन—अस्मिन् काव्ये कविना सः स्तुत्यः प्रयासोऽस्ति विहितो येन सर्वसामान्यजना अपि गीता सुधायाः पानस्य सौभाग्यमश्नुवीरन्। गीता-तत्त्व-मवगमयितुं यां पद्धतिं विद्वांल्लेखक आलम्बते सा एकान्ततो नूतना। समयस्य प्रवाहो निजं निजं महत्त्वं विशिष्टत्वं च निदधाति। तस्य विभिन्नत्वात् सा सरणिः, सा भावप्रकाशनरीतिः, सा स्वविचारोद्भावनविदग्धता या पुरातनैःस्नेहसि विद्वद्भिरैरङ्गीकृता, न विद्यमाने काले प्रिया भवितुमर्हति। कर्त्तव्यविमूढ

भारतं (अर्जुनम्) बोधयितु, स बस्तं भ्यो मुखीकर्तुं स्वविचारान् निधातु बचन-विधौ श्रीहरिर्यामितिश्रियत् सा हि तत्कालदृष्ट्या नितान्तमेवोपयुक्तोचिततरा, भर्वाचसीनीयतरा चास्ति परमेतस्मिन् साम्प्रतिके समये तद्विघनिगूढमूक्ममावोद् बोधनार्थं सा रीति, सा पद्धति समयविपर्यासवशात्रोचिततरा न प्रशस्ततरा च। एतस्मिन् माधुनिके काले तु तत्तद्विचारान् इदानीं ततस्य बस्तं स्वप्नमुप्तस्य भ्रान्तस्य मोहाक्रान्तस्य जनसमुदायस्य मानसे ऽवतारयितु नूनमियमेव शैली या उद्बोधनकारेण विवसवाणबरेण्येन प्रयुक्ता सर्वथैव युक्ता एतत्सम्याऽनुरूपपद्धते-रिह काव्ये हृदयंगमाऽपुरि, पद्धतेरस्या नूतनत्वमुत्तमिति विदाङ्कुर्वन्तु सुधियः।

येषां सद्गुणानां सद्भावादस्य कवे अन्यानि काव्यानि राष्ट्रकवित्वं साधयन्ति त एव सद्गुणा अत्रापि काव्ये विलसन्तो हृदयंगमाः इदमपि काव्यं कवेरेतस्य राष्ट्रकवित्वमुपपादयति। न काव्यान्येवैतदीयानि कवेरेतस्य राष्ट्र-कवित्वं प्रमाणीकुर्वन्त्यपि तु कवेरस्य अध्यवसायनिष्ठं कर्त्तव्यरतं भावुकं जीवनमपि सर्वं नितान्तोज्ज्वलगुणा वस्तुत कवे राष्ट्रकवित्वमुद्घोषयति। साम्प्रतमपि च भविद भारत गस्योद्बोधनाय ईदृशा कवयोऽजस्र यतमाना प्राप्यन्ते।

भाषा विश्वास सम्बलवन्त कर्मवीरा साहसिनो वीरपुरुष सिंहा एव स्वकीय राष्ट्र पतनादुद्धर्तुं शक्नुवन्ति, तेषामेवोत्साहमयेनोद्योगेन, तेषामेव दुराचार भ्रष्टाचारविध्वसनकुशलकर्मभी राष्ट्रमुन्नत भवति। कविस्तस्माद् दैरीजस्विभि शब्दैर्भारत निवासिन स्वान् सकलानपि अर्जुनसमिकाशान् बन्धून् आमन्त्रयति ये शब्दा सुषुप्तान् प्रबुद्धान् कर्तुं, प्रबुद्धान् उत्थितान् कर्तुम् उत्थितांश्च स्वदेश प्रभूतदोषारातीन् नाशयितुमुद्यतान् कर्मपरायणांश्च कर्तुं प्रभवन्ति—

1 'दुर्दम्य दस्यु दल दलने को परिकर बांधो सत्वर।

२१ कर दो कृताय निज जन को उद्भासित कर रण सत्वर'॥१५॥

भाषा भाव साहित्यिक-सौन्दर्य सामयिकत्वादिसम्पत्तिनीभि सर्वाभि-रपि दृष्टिभि कृतिरियं सर्वथैव श्रेष्ठा।

मणिविग्रह—लेखकस्य कृतिरियं हिन्दीसाहित्येऽनुपमैका रचनास्ति। एतदीयमाख्यानक महाभारतीयसौप्तिकवधमवलम्बते। साहित्यिक्या सुषमाया

निधानभूतस्यास्य खण्डकाव्यस्य निर्माणे कविना नार्या गौरवं प्रदर्शयितुं कृतमस्ति । तत्र कविराह्—

"नारी तो शक्तिस्वरूपा, आत्मा की अमर कला है ।
इस बल पर ही तो सारा, जग का व्यवहार चला है ।।"

कविता स्वयमेव वर्तते सिद्धाना महापुरुषाना परिष्कृता वाणी । तस्यास्तथाविधत्वात् तस्या किमपि लोकोत्तरं रमणीयत्वं परिस्पन्दते । यदि अनवदातमपि आविलमपि किमपि वस्तु ता स्पृशति तदा तदपि अवदाततामनाविलताञ्च प्रयाति । तस्य वस्तुनस्तु कथैव का यदस्त्युदात्त वल्गु च । तत् तत्र द्विगुणां समुज्ज्वलतां तेजस्वितामश्नुते । मणिनिग्रहस्य द्वयोरपि तत्त्वयोर्हृदयाभिरामत्वात् सोऽतितरामेव सहृदयान् परिप्रीणाति ।

स्वपितृवधजनितकोपानलदग्धोऽश्वत्थामा पाञ्चाल-भूपस्य परिजनादिकं सहृत्य सुप्तान् पाञ्चाल्या शिशूनपि जघान-इत्येतद् वृत्त कविरेतस्मिन् काव्ये यथाऽभिव्यक्तयाऽभिव्यनक्ति करोति सा अभिव्यक्तिर्वस्तुतो नितान्तमेव प्रशंसनीयास्ति । तच्चारुतममनोऽभिरामाभिव्यक्तिवलात् तत् कथावस्तु सामान्यमप्यसामान्यतामाकर्षणरहितमपि आकर्षणता गतमस्ति । अस्मिन् काव्ये प्रथमन्तु वैशिष्ट्यमिदमेव यत् कथाया प्रतिष्ठापन तत्र रसिकमन प्रमोदनपरायामभिरमणीयायामभिव्यक्त्या विहितमस्ति । द्वितीयञ्च वैशिष्ट्य तत्रेद यत् काव्यं कविना वैमल्यजुषा विचाराणा बन्धुरया मालया विभूषित विधाय सचेतसा पुर सम्प्रस्तुतीकृतम् । तत्तदुज्ज्वलतरोदात्ततरविचारधाराधिवासात् काव्यमेतत् लोकोत्तरसौरभसुमेवितसुमनमुल्लसितसरससुमृदुलफलश्रीसुशोभितसच्छायतरुराजिविलसितरम्योपवनमिव प्रतिभाति ।

अस्मिन् काव्ये कृपाचार्यो द्रोणात्मजस्यान्तस्तलोन्मीलनाय यदुपदिदेश तत् तु श्रेयोऽभिलाषिणामवश्यमेव पठनीयम् । कवि कृपाचार्यमुखेन शास्त्राणा सारं महाजनानामनुभवनवनीत च प्रतिष्ठाप्य अहो, मानव-समाजस्य परमशुभचिन्तकसुहृदिव समुपस्थितो भवति । निपीयता सा सुधा—

सम्पूर्ण प्राणियों का हित, करना ही धर्म कहा है ।
इससे बढ़ कर कर क्या कोई, ऋषियों का कर्म रहा है ।।८८।।

× × × ×

समुचित विधि से अपनाना, परिणाम सुखद साधन ही।
अनुचित निधि पाने से तो, है रहना श्रेष्ठ अधन ही ॥६५॥

*नात्र विचिकित्सा मनागपि एतत्काव्य कवनयोगाद् हिन्दी-भाषा अस्य संस्कृतसाहित्यप्रकाण्डपण्डितस्य करकमलं सश्रित्य कामपि अभिनन्दनीयां परिष्कृततां, कामपि सभाजनीयामेव विच्छित्तिं, कामपि नव्यामेव प्रौढताञ्चोपलब्धु सदवसरं सलभते ।*

भारत सुषमा—इदं हि श्रीआचार्यशुक्लस्य लघुकाव्यं सम्प्रत्यपि अप्रकाशितदशायामेव वर्तते*। अत्र भारतस्य महिमा सरसतया सरलतया च वर्णित। अस्ति कविर्भारतीय-संस्कृतेर्गायक। एतत् तथ्यं तदीयाभि सर्वाभिरपि कृतिभि स्पष्टीभवति। परं काव्यस्यास्य तु तज्जीवातुत्वेनैव जानन्तु विपश्चित। अस्ति कवे स्वदेशाभिमानं कस्य न स्वदेशाभिमानिन स्पृहणीय —

क्व रामराज्योपमराज्यमस्ति ? गीतोपदेष्टा क्व नु कृष्णचन्द्र ?
अहिंसको बुद्धसम क्व वास्ते ? क्व चास्ति चाणक्यसमो नयज्ञ ?
क्व कालिदासस्य कला विलास क्व वा विभातप्रतिम स भास ?
हर्ष क्व वा हर्षततिं ततान, बाण क्व वाऽभूत् खलु पञ्चबाण ?
असीमलावण्ययुताऽबलापि बलावलीना दलने प्रवीरा।
म्लेच्छानिमान् काश्चिदयो चकर्त चकार वा कानपि कान्दिशीकान् ॥
खड्गप्रहारेण चकार वीरान् मूर्धाभिषिक्तानपि मूर्धहीनान्।
विपक्षवक्ष क्षपणैकदक्षा, भञ्जेव झाँसीकमनीयलक्ष्मी ?

सदैव समर्थेऽपि काव्ये कवेर्देश प्रेम तरङ्गततिरुल्लवते ।

प्रकीर्णकम्—माननीयस्याचार्यशुक्लस्य प्रचुरा साहित्य सम्पत् हिन्दी-संस्कृतपत्रिकासु विकीर्णा समुपलभ्यते। तस्य सवस्या अपि मूल्याङ्कनार्थं तु स्थानाभाव एवात्रातो दिङ्मात्रमिह चर्चा विधीयते। या हि तदीया प्रकीर्णक-

* अस्य खण्डश प्रकाशन 'सुप्रभातम्'-पत्रेऽभूत। किञ्च कानिचिद् पद्यानि कतिपयेषु संस्कृत सकलनषु सकलितानि।

त्वेन रचना विराजन्ते तत्रापि सर्वत्र काव्यसम्बन्धिन्यः सर्वा सुन्दरता शोभन्ते। निपीयन्ता तद्रचितात् 'विश्वसंस्कृत'-पत्र-प्रकाशितात् 'पर्यनुयोगाद्' काश्चना-मृतविप्रुषः—

"तव भूत्वा कमला-पते ! कस्य गेहमुपयानि ?
किन्नु ममैव तवाप्यहो ! सन्ति न तानि दिनानि ?
यानि कुत्र करुणाकर, दीनबन्धुमपहाय ?
याति न जलधारा क्वचित्, जलनाथ परिहाय ॥
मन्ये पाप-परायणो, मत्तुल्यो भुवि नास्ति ।
पाप-सिन्धु-परिशोषणे, त्वत्तुल्योऽपि च नास्ति ।।"

क्वचिद् भक्तिभावनामया राष्ट्रप्रेमपरिपूर्णाश्च स्वरा रचनास्वेतासु मुखरीभवन्ति क्वचित् पद्येषु कवेर्भक्तहृदयं श्रुतिगोचरीभवति, क्वचिच्च समस्यापूर्तिरूपे दृश्यते तत्प्रतिभाचमत्कारः ।

आचार्यश्रीशुक्लेन विरचितानामभिनन्दनपत्राणामपि सङ्ख्या विशाला। तत्र हि तदीयाशुकविता मञ्जुला च शब्दयोजना दर्शनीयैव । अत्रैकः श्लोकः श्रीप०मदनमोहनमालवीयाय समर्पितादभिनन्दनपत्रादन्यश्च दिल्ल्याः सुप्रथित-वैद्यमनोहरलालशास्त्रिणः कृतेऽर्पितादभिनन्दनपत्राच्चोद्ध्रियते—

वाराणसीपरिसरे सुरसिन्धुतीरे निःशेषशास्त्रकलनादृतसच्छरीरे ।
हिन्दुत्वशोभितमुखेऽमितविश्वविद्ये विद्यालये तव चकास्ति कृतिश्चिराय ॥
यद्दर्शनेन मनसोऽद्भुतसौमनस्यमक्ष्णोश्च जन्म सफलत्वमथ प्रसारम् ।
प्राग् भारतस्य रमणीयकलागुरुत्व श्रीशालिताञ्च सममेव जना विदन्ति ।।

मनोहराभिनन्दनग्रन्थे 'नुसखा' इत्येतत्पदस्य प्रयोगः कियता वैचित्र्यावहेन पाटवेन सङ्गततां नीत इत्येतच्च प्रेक्ष्यताम्—
"हहो त्वदीय कलकीर्तिकलापचन्द्रे, काचिद् विभाति कमनीयकलङ्करेखा ।
लोके सुलब्धयशसो 'नु सखा' न कोऽपि, यो द्रौणिचन्द्रचिररोग विनाशकः स्यात् ।।"

संस्कृतभारत्या दुर्दशां वीक्ष्य भवदीयं हृदयं सदैव व्याकुलतां विह्वलतां च प्रागच्छत् । १९९६ तमवैक्रमाब्दे काशीतः प्रकाशिताया ज्योतिष्मत्याः प्रथमेऽङ्के स्थिता गीतिरियं श्रूयताम्—

"अयि भारतीयविद्ये ! केयं दशा त्वदीया ?
नो दृश्यते पुरेव शक्तिः शुभा त्वदीया !

परितः समुल्ललास, तव भाग्यभानुरम्ब !
हा हन्त ! साम्प्रतं किं, शोच्या दशा त्वदीया ?
भक्ष्य निज सुरूप प्रतिहाय हाय दीना—
जातासि वन्दनीये ! चैव दशा त्वदीया।
सा साङ्गवेदविद्या, प्रतिसद्म नो विभाति;
यस्या बलेन जाता शोच्या दशा त्वदीया॥
धिक् त्वस्तवैव पुत्रान् धनशालिनोऽपि मातः !
विद्यान्तरं प्रपन्ना यत्नावनी त्वदीया॥
आनन्दकन्द ! ब्रह्मानन्दस्य प्रार्थनेयम्
सर्वत्र दुःखिता किं भुवि सन्ति ये त्वदीयाः ?

आचार्य शुक्लस्य रचनासु 'वस्त्रावतार' इत्येतन्नामिकाप्येका रचनास्ति। अत्र तत्रत्य स एकः श्लोको निधीयते यत्र, वस्त्रावतारानन्तर कृष्णाकृतस्य 'केशव ! एतावन्ति अनन्तानि वस्त्राणि त्वत्समीपे कुत आगतानी' त्येतस्य प्रश्नस्योत्तरो भाति—

'तेरे रोदनसूत्रों से, मैं पट बुनता जाता था।
गोविन्द ! द्वारकावासिन् ! की रट सुनता जाता था॥'

तदीयानां सर्वासामपि कृतीनां मध्ये एषोऽपि सद्गुणो महान् परिस्फुरति यन्मानवस्तत्र सम्प्राप्नोति आश्वासनं च भृशम्। यस्त्वपि तदीयैका रचना 'आश्वसना'भिधाना पृथगेव यस्माद् स्फुटतयैव श्रुतं भवतीदम्—

'रक्षां विधास्यति पिता जगदीश्वरोऽसौ
यस्त्रायते सकलसृष्टिमिमां दयालुः।
कस्माद् धृतिं त्यजसि बन्धुवर ! त्वमत्र
हित्वा भयं सपदि तं शरणं व्रज त्वम्॥'

प्रतिभा यत्रापि गच्छति, यस्मिन्नपि कार्ये क्षेत्रेऽवतरति तत्र सा स्वकीयं सर्वाभिभाविनं प्रभावं प्रतिष्ठापयन्ती अनन्यगं यशो विन्दति। आचार्यशुक्लोऽस्ति प्रतिभावान् विद्वान् अतो यथा तदीया कविता पद्यरूपा भवति सहृदयहृदयपरितोषिणी, तथैव सा गद्यरूपापि भवति विदुषां सचेतसां हृदयावर्जनकारिणी। इह श्रीशुक्लमहाभागस्य लेखनी गद्येऽपि कियत्या श्लाघनीयया

गत्या सञ्चरते-इत्येतद् ज्ञापयितु तद्रचितगद्यस्य कतिपयपङ्क्तय इह उपन्यस्यन्ते—

"पूर्वपुण्यतपोव्रातसन्तुष्टस्य परमात्मनोऽनुग्रहेण कथ कथमपि स्वतन्त्रे भारते प्राचीनार्वाचीनविविधविद्याम-दाकिनीरसास्वादसमाराधनक्षणोऽस्माभि स्वलोचनजालैरेवावलोकित । राष्ट्रस्य सांस्कृतिक गौरवमैश्वर्य च रक्षितु गाढान्धकारगर्तेषु निपतितानां प्रत्नानां रत्नानां समुद्धाराय यथाशक्ति सर्वैरेव प्रयत्नपरैर्भवितव्यम् ।" (संस्कृतसुषमात) ।

श्रीनेहरूचरितम्—आचार्यश्रीब्रह्मानन्दशुक्लकृत श्रीनेहरूचरितमष्टादश सर्गक महाकाव्य वर्तते। काव्यस्यास्य पूर्ति श्रीशुक्लेन कविरत्नेन १४-११-१९६८ तमेशवीयतिथौ कृता । अधुना काव्यमेतत् प्रकाशितीभूय साहित्यजगत्यवतीर्णं भवतीति हर्षस्य विषय । काव्येऽत्र स्थितानां सर्गाणां कथाया सारोऽयम्—

आचरत् प्रथमे सर्गे मङ्गलाचरण कवि ।
सङ्केत विदधद्रम्य कथावस्तुपर प्रधी ॥१॥
काश्मीरस्य विभा दिव्या द्वितीयेऽदर्शयद् बुध ।
दत्वा परिचय पुण्य मोतीलालमनीषिण ॥२॥
तृतीये तन्मन सूता सुनाभावव्यथा तत ।
वरदानञ्च पुत्रस्य, योगिदत्तमवर्णयत् ॥३॥
श्रीजवाहरलालस्य चतुर्थे जन्म कोविद ।
गीतवाश्च पुनस्तस्य सस्कारान् पञ्चमे शुभान् ॥४॥
इगलेण्डाख्यदेशे हि, शिक्षार्थं वसति पुन, ।
षष्ठे चावीतयद् धीमान् धीमतस्तस्य सादरम् ॥५॥
यात्रा च सप्तमे तस्यामेरिकाम्प्रति धीमत ।
मञ्जुलाया पदावल्या गायति स्म गुणिप्रिय ॥६॥
दशायास्तस्य देशस्य पित्रोक्तायास्ततोऽष्टमे ।
बाँकीपुरश्च यात्राया वर्णन कविना कृतम् ॥७॥
आत्मनश्चिन्तन कुर्वश्चित्रितो नवमे युवा ।
समन्वयकरी किञ्च तर्कुता हरि-वन्दना ॥८॥
मातृ पितृ कृतां वार्तां तदुद्वाहपरा पुन ।
मनोज्ञैर्दशमे शब्दैर्निबबन्ध सुधी शुभाम् ॥९॥

सम्बन्ध-स्वीकृति किञ्च कमला पितर प्रति ।
कविरेकादशेऽगायद् विवाहमङ्गल प्रथाम् ॥१०॥
यौअवाहरणालस्य लोकमङ्गलपावनम् ।
विवाह द्वादशे सर्गे गीतवान् कविवल्लभ ॥११॥
देशस्य दुर्दशा क्षोभ्या कमलायाश्च रुग्णताम् ।
महात्मगान्धि-सान्निध्य, कारागार निषेवणम् ॥१२॥
मातु पितुश्च कान्ताया नाकवास त्रयोदशे ।
स्वातन्त्र्यस्य च प्रस्तावमङ्कुते स्म विचक्षण ॥१३॥
स्वातन्त्र्यान्दोलन किञ्च 'भारत त्यजत द्रुतम्' ।
इत्येवा घोषणा मन्या।मिन्दिरायाश्च शिक्षणम् ॥१४॥
स्वतन्त्रताश्रियो लब्धि सादर समुद तथा ।
सर्गे चतुर्दशे विद्वान् गायति स्म मनोहराम् ॥१५॥
तत पञ्चदशे विज्ञो भारतस्य विभाजनम् ।
तज्जन्यनरसहार समस्या शरणार्थिनाम् ॥१६॥
यत्न देशोदयार्थं च निधन च महात्मन ।
सर्वाण्येतानि वृत्तानि ग्रथ्नाति स्म सता मत ॥१७॥
नेहरो सर्वकार्याणि भारतोत्कर्षहेतवे ।
षोडशेऽवर्णयद् धीरो वदान्यानि महान्ति च ॥१८॥
कवि, सप्तदशे देश नवनिर्माणयोजनाम् ।
न्यबध्नात् सादर सुवल सर्वलोकहितावहाम् ॥१९॥
अष्टादशेऽस्ति सर्गे च विश्वशोकभृशप्रदम् ।
निधन विश्ववद्यस्य नेहरो पण्डितस्य हा ॥२०॥

इद हि नेहरूचरितमहाकाव्यस्य यथावस्तु सारत्वेन निवेदित, सम्प्रति तन्महाकाव्यस्य समासेनैव विशिष्टता निधीयते—

ब्रह्मानन्दकवेरिय नवकृती रम्या नितान्तप्रिया
लेखमा इह तस्य रुपरुचिर प्रौढ भवद् दीप्यते ।
मन्ये काव्यतपोऽत्र पूर्णविधिना यात कवे पक्वतां
दृष्या चात्र चकास्ति काव्यसुषमा सर्वत्र नैसर्गिकी ॥१॥

ते वन्दनीयचरणा उभयत्र नूनं
लब्ध्वा यशोऽतिविमलं सतत जयन्ति" ॥१.११॥

(कवेर्हृदयम्) केचित् स्तुता सुकविभिर्धनलाभलोभाद्
पूर्वं गुणैर्विरहिता अपि राजलोका. ।
तद् मार्गविगर्हणमितीव वदन्ति धन्या.
विज्ञा मनागपि न तानभिनन्दयन्ति ॥१.१६॥

(कवेर्मान्यता) दुर्जात-चेष्टितपरैरमृतैर्वचोभि
ये वा कलाकुशलता परिघर्षयन्ति ।
मत्य हि ते स्वरचनाचतुराश्चिराय
लब्धश्रियोऽपि कविकर्म कदर्थयन्ति ॥१.२३॥

जाने न मेऽस्ति विमला धिषणा न विद्या. सत्काव्यसाधनविधिर्न च पूर्वपुण्यम् ।
यत्त्वयमत्र परमात्मकृपावलम्ब पूर्णा दया च गुरुपाद-सरोरुहाणाम् ॥१.१७॥

अधिप्रयागमदृश्यत्वे सरस्वत्या. कवे. कल्पना श्रूयताम्—

कालिन्दी गङ्गया सार्धं मिलन्तीं वीक्ष्य विस्मिता ।
कूपे यत्रापतन्मन्ये ह्रीणा सापि सरस्वती ॥२.१६॥

कर्मप्रधानोऽखिल जीव लोकः
यो यादृश कर्म करोति जीव ।
सर्वेश्वरस्तादृशमेव तस्मै
फल ददाति प्रियमप्रिय वा ॥३.६॥

क्वचित् क्वचित् शास्त्रीयपाण्डित्यमपि । दृश्यतामभेरिकावर्णनप्रसङ्गे—
वृद्धिंगतम्बेषु गुणाश्च हारे यत्राङ्गनाना परस्पताऽस्ते ।
सवर्णदीर्घो जनतासु यत्र संयोगयोगश्च कटाक्षमोक्षे ॥७.२॥

भारत-दशा-प्रसङ्गे—
पारेसमुद्र विगतं सुवर्णमलङ्कृति काव्यपरम्परायाम् ।
गुणास्तु सारूप्ये पुरुप प्रपन्ना न भारते सन्त्यधुना प्रतीताः १७.१२॥

पाटल-कलिकाऽभ्जनप्रसङ्गे उत्प्रेक्षा—
कमला वसति रमास्य हृदये स्थलपद्मिनी ।
मन्ये तस्माद् दधाराऽसौ तत्स्मृतौ स्थलपद्मकम् ॥१८ ४०॥

अन्तिमे सर्गे अंश एष दर्शनीयो यत्र नेहरुणा स्वजीवनान्तसमये नैजा-न्तिमाभिलाष प्रकटीकृत —

"अस्थीनि मम गङ्गाया प्रक्षेप्तव्यानीति कामये
किञ्च भस्मावशेषोऽपि सावधानतया जनैः
वायुयानं समारुह्य सर्वदिक्षु निपात्यताम्
येनान्ते कथयिष्यन्ति जना भारतसेवक.
मृत्तिकातोऽस्य देशस्य विलीनोऽप्यत्र सवभौ ॥"

इन्दिराया विलाप (सर्गेऽन्तिमे)

"कुररीव रुरोद सा भृश पितुरङ्के विनिपत्य निर्दयम् ।
समुपेत्य विधेर्विडम्बना विनिकृत्तेव लता तरोरध ॥
'अयि तात विहाय मामितो जननी मे प्रथम दिवगता ।
विपरीतदशा ममेदृशी त्वमपीहाद्य, विहाय मा गत ॥
वद कोऽस्ति ममेह साम्प्रत परिखिन्नामपि योऽद्य पालयेत् ।
जननीजनको विनाथवा परितापप्रशमाय को भवेत् ॥
कथयामि कथ मनोगत निजभाव वद कस्य सम्मुखे ?
मम चित्तदशामिमामहो ! नहि जानाति पर पुमानिह ॥
विललाप चिर तपस्विनी करुणीय पुनरादिशज्जनान् ।
रुरुदु समुपस्थिता जना करुणामूर्त्यभवत् तदा गृहम् ॥'"

वसुधा अवेपत व्योम व्यलपत्—

"वसुधापि चचाल शोकतो घनमालाश्रु मुमोच विह्वला" ॥

कवेर्नायक सदैव स्मरणीय —

"आमान्ति, यान्ति जगतीह सदैव जीवा:
स्वीयोदरञ्च सुचिर परिपूरयन्ति ।
जीवन्ति ये परहिताय वरेण्यभावा-
स्तानेव कानपि मुदा मनसा स्मराम ॥"

'नेहरुचरितम्' तु अधिकृत्य शब्दद्वयेन वक्तुमिद युक्त यत्—अस्ति तत् सग्राम-सेनानीजनान् प्रति विनम्र श्रद्धाञ्जलि,—

' ... ध्वान्तमखपूत्यर्थं स्वप्राणा यै समर्पिता ।
तेषा शाश्वतसम्मानरूपेय शब्दयोजना ॥'

यया इमे कवयो यदीयाभि कृतिभि संस्कृत साहित्य सम्प्रत्यपि भूमण्डलवर्ति सकलान्यसाहित्य विजित्य विजृम्भते ।

लोकोत्तरा प्रियतरा कृतयो रसार्द्रा
भावोन्नता कृतिवरैरभिनन्दनीया ।
विद्यावदातहृदया ललिता यदीया
स्तोतु न तान् भवति कस्य मन प्रसार ?॥

श्रद्धयश्रीशुक्लस्य सकलमपि साहित्य स्वस्थपरम्पराया साहित्यम् अस्ति । अस्ति च तद् भारतीयसंस्कृतेरनुपम गायकम् । तस्याप्रकाशितसाहित्यस्य प्रकाशन नितरामवापेक्षित वतत । अस्त्यस्मदीय महद् सौभाग्य यदीदृग् रससिद्ध कविरस्माक मध्येऽभिराजमान । एतादृश पावनचरितैस्तपस्या गज्ञाननिधानभगवच्चरणार्पितमानसं कविवरं पण्डितरस्माक प्रिय भारत सन्तत विभूष्यमाण भवत्वेतत् प्रार्थयन् कामये—

अज्ञान ध्वान्त भानुर्भवभयमथन ज्ञानपीयूषरूपम्
पाथेय शान्ति लिप्सोरघ-तृणदहन जीवन सत्तृष्ण्या ।
निस्तार शोकदावानलविकलहृदा मानवाना महीयान्
ब्रह्मानन्द समया वितरतु सतत मङ्गल मङ्गलस ॥

—रमेशचन्द्रशुक्ल



श्रीहरिः

# प्रथमः सर्गः

वाग्देवता दलित-दुर्बल-बुद्धि-दोषा,
शब्दार्थ-भाव-रस-रीति-विधान-दक्षा ।
हृत्तन्त्रि-ताडन-परायण-पूत-पाणि-
स्तोषाय नो भवतु मञ्जुल-भाव-वेशा ॥१॥

दुर्बल बुद्धि के समस्त दोषो को दलन करने वाली, शब्द-अर्थ-भाव-रस-रीति-आदि के विधान मे दक्ष, हृत्तन्त्री का ताडन करने मे तत्पर पावन पाणि को धारण करने वाली तथा मनोरम भावो और वेश से युक्त वाग्देवी हमारे सन्तोष का कारण बने ।

या विश्ववन्द्यचरणा विदुषा वरेण्या,
कामादिदोष-दहनेऽतितमां प्रवीणा ।
वीणागुणैरभिनवैर्मुदमादधाना
सा शारदा मम मतिं विमलाङ्करोतु ॥२॥

जिसके चरण विश्ववन्दित हैं, जो विद्वानों के द्वारा उपास्य है, जो काम-आदि दोषों का दग्ध करने मे नितान्त निपुण हैं एव जो नित्य नवीन (स्वर-लहरियों का उद्गिरण करने वाले) वीणा के तारों से मोद धारण करती है—वह शारदा मेरी (मायामिगोचरा) मति को विमल बनाए ।

यस्याः कृपा-परवशा मुनयो महान्त-
स्तापापनोदनपराः परमात्मबोधम् ।
लब्ध्वा विवेक-तरणी सततं प्रसन्नाः
सा शारदा मम मतिं विमलाङ्करोतु ॥३॥

जिसकी कृपा से ताप को दूर करने में तत्पर बड़े-बड़े मुनि विवेक-नौका के समान परमात्मबोध को प्राप्त करके सदा प्रसन्न रहते हैं—वह शारदा मेरी बुद्धि को निर्मल करे।

यस्याः प्रसन्न-वदनं सदनं गुणाना-
मुल्लास-भाव-भरिताश्च सदा दृगन्ताः ।
भक्तार्ति-नाश-निपुणा वचनावली च
सा शारदा मम मतिं विमलाङ्करोतु ॥४॥

जिसका प्रसन्न मुख (सद्) गुणों का भण्डार है, जिसके नेत्रप्रान्त उल्लास-भाव से परिपूर्ण हैं तथा जिसकी वचनावली भक्तों के कष्ट को नष्ट करने में निपुण है—वह शारदा मेरी मति को निर्मल बना दे।

मन्मानसे विहरणैकपरं सुहंस-
मास्थाय या कलित-काव्य-कला-विलासा ।
आनन्द-वारिधितरङ्गततिं तनोति
सा शारदा मम मतिं विमलाङ्करोतु ॥५॥

मेरे हृदय-रूपी मानसरोवर में विहार करने वाले आत्मा-रूपी सुन्दर हंस पर विराजमान होकर, जो सुन्दर काव्य-कला के विलास से संयुक्त होकर

(मेरे मानस मे) ग्रानन्द-समुद्र की तरङ्गें उठाती है—वह शारदा मेरी मति को विमल कर दे ।

येषामलौकिक-नवीन-निबन्धजातै-
रद्यापि काव्य-कुसुमानि रसाप्लुतानि ।
आस्वाद्य, माद्यति चिराय विदां समाज-
स्ते वै जयन्ति कवयो गुरवः पुराणाः ॥६॥

जिनके अलौकिक एव (नित्य) नवीन प्रबन्धो (योजनाबद्ध रचनाओं) से रस-सिक्त काव्य कुसुमों का आस्वादन करके सहृदय समाज आज भी मतवाला हो उठता है, वे गरिमाशाली प्राचीन कवि सर्वोपरि हैं (उनकी जय हो !) ।

ते वै जयन्ति नितरां कवयो यदीया
वाङ्माधुरीमनुसरन्त्यपरेऽधुनापि ।
वाल्मीकि-शोधित-नवीन-कवित्व-मार्गं
व्यासादयोऽप्यनुययुर्जनजीवनाय ॥७॥

उन कविवरो की जय हो, जिनकी वाङ्माधुरी का अन्य (कविजन) आज भी अनुसरण करते हैं । (यह अनुसरण बुरा नहीं है, क्योंकि आदि-कवि) वाल्मीकि के द्वारा स्थापित कवित्व के नवीन मार्ग का व्यास आदि (जैसे श्रेष्ठ कवीश्वरों) ने भी लोक कल्याण के लिए अनुसरण किया था । (जब इतने बडे मेधावी भी, लोकोपकार के लिए पूर्व कवियों का अनुसरण बुरा नही समझते तो आधुनिक कवियो को सङ्कोच क्यों हो सकता है ?)

वेद-प्रदीप-शिखयोज्ज्वलयान्धकारं
विद्राव्य यैरमरता जगते प्रदत्ता ।
विज्ञान-वैभवभृतोऽपि न येऽत्र चक्रुः
प्रीतिं मनागपि धनेऽखिलदुःखमूले ॥८॥

(जय हो उन पुरातन सत्कवियों की) जिन्होंने वेद-रूपी भव्य दीपक की उज्ज्वल लौ से अज्ञानरूपी अन्धकार को ध्वस्त करके जगत् को अमरता प्रदान की तथा विज्ञान वैभव को धारण करते हुए भी जिन्होंने समस्त दुःखों के हेतुभूत धन में तनिक भी लगाव नहीं रखा।

येषां वचांसि कमनीयतमं प्रभावं
अत्यर्थयन्ति कमपि प्रथितं जनेषु ।
शंसन्ति हन्त ! न हि तानबुधा. प्रकामं
दीनार्ति-वारण-परानपि दैन्यहीनान् ॥९॥

(श्रद्धा है उन सत्कवियों पर) जिनकी उक्तियां लोगों पर किसी अनिर्वचनीय एवं सुन्दरतम प्रभाव को डालती हैं. किन्तु शोक है उन मन्दमतियों पर जो दीनों के कष्ट दूर करने में प्रवृत्त एवं स्वयं अदीन उन (महापुरुषों) की भी मुँह खोलकर (पूर्णरूप से) प्रशंसा नहीं करते हैं।

येषाममोघवरदान-तपःप्रभावा-
दिन्द्रादयोऽपि विपुलां श्रियमाश्रयन्ते ।
ये सर्वदा जनहिताय तपश्चरन्ति
ते लोकपालनधियो मुनयो जयन्ति ॥१०॥

जिनके अमोघ वरदान एवं तप के प्रभाव से इन्द्र आदि देवता भी विपुल शोभा-वैभव पाते हैं तथा जो सदा ही जनकल्याण के निमित्त तपश्चरण करते हैं—लोक-पालन में दत्तचित्त उन मुनियों की जय हो।

ये मानवा मनुजतां परिपालयन्तो
राष्ट्रोन्नतौ निजधियं विनियोजयन्ति ।
ते वन्दनीयचरणा उभयत्र नूनं
लब्ध्वा यशोऽतिविमलं सततं जयन्ति ॥११॥

जो पूज्यपाद मानव मानवता का परिपालन करते हुए राष्ट्र की उन्नति में अपनी बुद्धि को जुटा देते हैं—वे इसलोक और परलोक में निश्चय ही नितान्त अवदात कीर्ति को प्राप्त करके जय प्राप्त करते हैं।

येषां मनो न रमते विपुलेऽपि वित्ते,
नैवात्मजे न च कुले न च लोक-सौख्ये ।
नाना-विभूति-कलनां ललनां विहाय,
ते सर्व-विश्व-हृदयाः सुतरां जयन्ति ॥१२॥

समस्त संसार के हृदयभूत वे व्यक्ति वस्तुतः जय प्राप्त करते हैं जिनका मन (संसार के कल्याण के लिए) नाना-वैभव-युक्त स्त्री को भी छोड़ देता है और पुष्कल धन, पुत्र, वंश तथा सांसारिक सुखों में भी लीन नहीं होता।

तेषां प्रशस्तयशसा किल वर्णनाय
बद्धादरोऽपि नहि वेद्मि निजात्मयोगम् ।
पूता भविष्यति ममापि मतिस्तथापि
मत्वेत्यमेव चलितोऽस्मि गतिं विधातुम् ॥१३॥

. . उन प्रथितकीर्ति विभूतियों के वर्णन के लिए आदर रखते हुए भी मैं (उसमें) अपने योगदान का प्रकार नहीं जानता हूँ, तो भी, (उनके गुणानुवाद से) मेरी बुद्धि पवित्र हो जायगी, यह सोचकर ही मैं कुछ पद रखने के लिए चल पड़ा हूँ।

शब्दार्थ-चिन्तन-परस्य रस-प्रतीति-
राविर्भविष्यति कथं प्रथिता ममेह ?
जाने, तथापि कलयामि गुरु-प्रभावं
दिव्याञ्चताममरवाचमहं प्रपन्नः ॥१४॥

(केवल) शब्द एवं अर्थ का ही ज्ञान रखने वाले मेरे (काव्य) में रसानुभूति की अभिव्यक्ति किस प्रकार (सहृदय-समाज में) प्रसिद्ध होगी, यद्यपि यह मैं जानता हूं, तथापि गुरु-(चरणों) के प्रभाव पर मेरा विश्वास है और (उसी के भरोसे) मैं उस दिव्य अमरभारती की शरण में आ गया हूँ।

साशेष-देश-जनतां परिपालयन्ती,
धात्रीव केलिकलया कलमालपन्ती ।
नूनं विधास्यति दयां मयि दीनदीने
येनात्र कर्मणि सुखं सफलो भवेयम् ॥१५॥

जिस प्रकार खेल खेल में मधुरालाप करती हुई धात्री शिशु का पालन करती है उसी प्रकार (यह अमरवाणी भी) समस्त देश की जनता का अपनी क्रीडा-कला से तथा मधुरालाप से परिपालन करती आयी है एवं मुझे विश्वास है कि मुझ दीन पर अवश्य ही (अभिव्यक्ति साफल्य-दान-रूप) दया करेगी जिससे मैं इस (नेहरू चरित-काव्य-निर्माण-रूप) कार्य में सानन्द-सफल हो जाऊँ।

सन्तोलयन्ति तुलया निजयैव पण्यं
सर्वे यथा विपणिनो निरताः स्वकार्ये ।
सन्तस्तथा कृतिमिमामगुणामपीह
सम्मानयन्त्विति भृशं किल कामयेऽहम् ॥१६॥

जिस प्रकार अपने काम में लगे हुए सभी व्यापारी माल को अपनी तराजू से ही तोलते हैं उसी प्रकार सज्जन-गण मेरी इस गुण-हीन कृति को भी (अपनी समझकर और अपनी उदार दृष्टि से सनाथित कर) सम्मानित करें—यह मेरी कामना है ।

जाने न मेऽस्ति विमला धिषणा न विद्या
सत्काव्य-साधन-विधिर्न च पूर्वपुण्यम् ।
यत्सत्यमत्र 	परमात्म-कृपावलम्बो
ऽपूर्वा दया च गुरु-पाद-सरोरुहाणाम् ॥१७॥

मुझे लगता है कि न तो मेरे पास निर्मल प्रतिभा ही है, न विद्या, न सत्काव्य-निर्माण की प्रक्रिया और ना ही प्राक्तन पुण्य (जो कि काव्य-रचना के हेतु हो सकते हैं); बस, सच तो यह है कि इस कार्य में मुझे परमात्मा की कृपा और गुरु के चरण-कमलों की अपूर्व (अद्भुत) दया का ही सहारा है (अर्थात् मैं विधिवत् कवि नहीं हूँ तथापि यदि इस रचना में सफलता मिली तो वह परमात्मा और गुरु की कृपा का ही परिणाम होगा) ।

विज्ञा वदन्ति महतां गुण वर्णनेन
वाचो भवन्ति परिपूततमा. कवीनाम् ।
ये प्राक्तनैरवतरन्ति तपोभिरत्र
ते वै भवन्ति महनीयगुणा महान्तः ॥१८॥

विज्ञजन कहते हैं कि महापुरुषों का गुण-गान करने से कवियों की वाणी पवित्र हो जाती है। जो पूर्वजन्म की तपस्याओं से इस संसार में अवतीर्ण होते हैं, वे महिमामय गुणों वाले व्यक्ति ही 'महान्' होते हैं।

केश्चित्स्तुताः सुकविभिर्धनलाभलोभात्,
पूर्वं गुणैर्विरहिता अपि राजलोकाः।
तद्वाग्विगर्हणमितीव वदन्ति धन्या
विज्ञा मनागपि न तानभिनन्दयन्ति ॥१६॥

किन्हीं (तथाकथित) सुकवियों ने धन-प्राप्ति के लोभ से, पहले (अतीत में) गुण-हीन राजाओं का गुणगान किया है, जो (सरस्वती के पावन प्रसाद से) धन्य हैं ऐसे विज्ञजन उस (स्तुति) को वाणी का कलङ्क ही मानते हैं और उसका जरा भी अभिनन्दन नहीं करते।

शब्द-प्रसारणपरामुपलभ्य शक्तिं
विश्वेशवन्दनपरं रचितं सुकाव्यम्।
यैरादृता हरिगुणाः स्वकवित्वमार्गे
ते सर्वदाऽमितगुणा कवयोऽत्र धन्याः ॥२०॥

जिन्होंने शब्दों के विस्तार की शक्ति (अर्थात् कवित्व शक्ति) पाकर (उस) परमात्मा की वन्दनापरक काव्यों की रचना की है तथा अपने कवित्व-मार्ग में जिन्होंने हरि गुणों का आदर (सङ्कीर्तन) किया है वे अपरिमित गुणों वाले कवि इस संसार में सदैव धन्य हैं।

दीनाः स्ववित्तनिचयैः परितोषिता यैः,
प्राणा अपि प्रथितकीर्तिभिरत्र यैर्वा।

दत्ता परोपकृतये ननु तेऽपि धन्या
गीयन्त एव कविभिर्यदि साम्प्रत तत् ॥२१॥

जिन्होंने अपने धनो से दीनों को सन्तुष्ट किया है और जिन प्रसिद्ध यशस्विया ने परोपकार के लिए अपने प्राण भी दे दिये हैं ऐसे (सर्वात्मना) धन्य महानुभावों का यदि कवियों के द्वारा गुण गान किया जाता है तो वह सर्वथा उचित ही है।

ये वा कवित्व-कलना स्वमनोविनोद-
हेतु सदैव कथयति वदान्यवाच ।
तेषा वचोऽप्यभिमत गुणिना समाजे,
सन्तोपद भवति मोदभरान्वितञ्च ॥२२॥

जो वश्यवाक कविता करने को सदा अपने मनोविनोद का हेतु कहते हैं उनका कथन भी गुणियों के समाज मे रुचिकर सन्तोषदायक एव प्रसन्नता-दायक होता है।

दुर्जात-चेष्टित-परैरमितैर्वचोभि-
र्ये वा कला-कुशलता परिधर्षयन्ति ।
सत्य हि ते स्वरचनाचतुराश्चिराय,
लब्धश्रियोऽपि कविकर्म कदर्थयन्ति ॥२३॥

जो दूषित व्यक्तियों के चरित्र का अपरिमित वचनो से वर्णन कर के अपनी कला कुशलता को अपमानित करते हैं, सचमुच वे अपनी रचना से (अपने को) चतुर (समझने वाले) सासारिक वैभव पाकर भी कवि-कर्म को कलुषित ही करते हैं।

[अब कथावस्तु की अवतारणा करते हैं —]

असमाकमेव सुचिरस्य विरोधभावाद्
दुर्दैव-दूषित-दुराग्रह-पारवश्यात् ।
नाना निबन्त्रणवती भरतस्य भूमि-
र्दासीकृता नरपतेर्महिषीव जाता ॥२४॥

हमारे ही पुराने (पारस्परिक) विरोध के कारण, दुर्भाग्य के दूषित दुराग्रह से जन्य पारतन्त्र्य के कारण अनेक यन्त्रणाओं से (निगडित) भारत-भूमि (किसी) राजा की उस पटरानी के समान हो गई जिसे दासी बना दिया हो ।

संग्रामभूमिषु यदीयपराक्रमेण,
दुर्दान्तवैरिदलमस्तबलं बभूव ।
हा हन्त ! सम्प्रति समे वसुधाधिपास्ते,
काल-प्रभाव-वशगा व्यसने निमग्नाः ॥२५॥

जिनके पराक्रम से संग्राम भूमियों में मदोन्मत्त शत्रुओं की सेना का पराक्रम अस्त हो जाता था, दुर्भाग्य ! अब वे ही समस्त राजागण काल के प्रभाव के वशीभूत होकर व्यसनों (१ कुकर्मों २ आपत्तियों) में फँस गये !

वीरत्वभावरहिता, वसुधाभिरामा,
रामेव शत्रु-वशगा नितरां न रेजे ।
पुत्रान्वितापि जननी जननीलिहीना,
दीनार्ति-भार-परिताप-ततिश्च भेजे ॥२६॥

वीरत्व-भाव से रहित यह अभिराम (सुन्दर) वसुधा (भारतभूमि) शत्रुओं के फन्दे में पड़ी हुई सुन्दर ललना की भांति सुशोभित नहीं होती थी (और) पुत्रों से युक्त होने पर भी यह जननी (मातृभूमि) जन-नीति (लोगों की दुर्नीति) के कारण हीन होकर दीनों के दुःखों के बोझ से (जन्य) परिताप-परम्परा को वहन करती थी।

को वर्णयेदमितदुःखदवाग्निदग्धां,
तेजोविहीनवदना जननीमिव स्वाम्।
वीर-प्रसूमपि पराक्रम-सिद्धि-शून्या,
तामद्य भारतभुवं परिताप-दीनाम्? ॥२७॥

दुःख-दावानल से दग्ध, तेज से रहित मुख वाली अपनी माता के समान (उस) भारत-भूमि का, जो कि वीर प्रसविनी होने पर भी अब पराक्रम जन्य सफलता से रहित एवं सन्ताप से दीन हो गई थी, कौन वर्णन कर सकता है?

"चक्रारपङ्क्तिसदृश पुरुषस्य भाग्यं
निम्नोन्नतं भवति" यन्निगदन्ति विज्ञा.।
तत्सत्यमेव घटते ननु भारतेऽपि,
स्फूर्ति. कथंकथमपि प्रथिताऽत्र जाता ॥२८॥

"पहिये के अरों की भांति, पुरुष का भाग्य (कभी) नीचा (और कभी) ऊँचा होता रहता है"—यह जो विज्ञ जन कहते हैं, वह सत्य ही भारत पर भी चरितार्थ हुआ (क्योंकि) जैसे-तैसे यहां भी जागृति होने लगी।

भूतिं विहाय परिभूतिमवाप्य सुप्ता
मोहं विहाय जगतः परिकर्म कर्तुम् ।
निद्रामपास्य सुचिरात् किल कौम्भकर्णीं
सिंहा इवोन्नतधियः सहसा प्रबुद्धाः ॥२९॥

ऐश्वर्य को गँवाकर और पराभव को प्राप्त करके सोये हुए (भारतवासी) मोह (अज्ञान) एवं चिरकाल से प्राप्त कुम्भकर्णी निद्रा को दूर (फेंक) करके संसार का कल्याण (परिकर्म=प्रसाधन) करने के लिए उदात्त भावनाओं के साथ सिंहों की भाँति एकदम जाग गये।

ते पारतन्त्र्य-निगडैरतिमात्रदूनां
वृद्धामिव स्वजननीमवलोक्य भूमिम् ।
'कांग्रेस'—संसदमथो परिकल्प्य सर्वे
स्वातन्त्र्यमाप्तुमनसो मिलिता बभूवुः ॥३०॥

परतन्त्रता की बेडियों में जकड़ी हुई अपनी वृद्धा माता की भाँति मातृभूमि को अत्यन्त दुखी देखकर वे सब 'कांग्रेस'—संज्ञक संस्था का निर्माण कर के, स्वतन्त्रता प्राप्त करने की इच्छा से संगठित हो गये।

दासत्व-दूषणमपासितुमुद्धुरास्ते,
देवा इवामृतमवाप्तुमसीमधैर्याः ।
सर्वात्मना परिविहाय विरोधभाव-
मेकत्व-साधन-विधौ दधते स्म चेतः ॥३१॥

दासता के कलङ्क को उतार फेंकने के लिए कटिबद्ध वे, अमृत प्राप्त करने के लिए असीम धैर्य वाले देवताओं की भाँति, पूर्वरूप से विरोधभाव को छोड़कर एकता के उपायों के प्रति दत्त-चित्त हो गये।

"तीक्ष्णैः प्रयोगविधिभिः सफला भवाम,
शान्तिर्न नो भवति मङ्गल-सिद्धि-मूला।"
इत्यूचुरत्र कतिचिच्चपला युवानः
शान्तिप्रियाश्च न तथाऽभिमता अभूवन् ॥३२॥

"हम तीक्ष्ण प्रयोगों द्वारा (सशस्त्र संघर्ष में) सफल होंगे, शान्ति हमारी माङ्गलिक सिद्धि का मूल नहीं है" इस प्रकार कुछ अधीर युवकों ने कहा (अपना विचार व्यक्त किया), किन्तु शान्तिप्रिय (नेता) उस प्रकार सहमत नहीं हुए।

"सद्यः फलाय न भविष्यति शान्तिमार्ग"
इत्याकलय्य कतिचिद्विमता बभूवुः।
गौराङ्ग-नीति-कलनां विकलां विधातुं
हिंसास्त्रता निजकरे निगृहीतवन्तः ॥३३॥

"शान्ति का मार्ग शीघ्र फल देने वाला नहीं होगा" यह सोचकर कुछ लोग उनसे अलग हो गये और अंग्रेजों के नीति-जाल को छिन्न-भिन्न करने के लिए उन्होंने हिंसा का अस्त्र अपने हाथ में ले लिया।

'शान्त्या, निरालसतया सततोद्यमैश्च,
हृष्यत्सरोजवदना कमला सुलभ्या।

स्वाराज्य-सम्पदमवाप्य ततो महात्मा,
सत्याग्रहेण सफलोऽभवदात्मशक्त्या ॥३४॥

'शान्ति, आलस्यहीनता एवं निरन्तर उद्यमों से ही उत्फुल्ल कमल के समान मुख वाली लक्ष्मी सुलभ होती है।' (इसी के अनुसार) महात्मा गान्धी आत्मिक शक्ति के सहारे 'सत्याग्रह' के द्वारा स्वातन्त्र्य-सम्पत्ति पाकर सफल हुए।

स्वातिन्त्र्य-मख-पूर्त्यर्थं स्व प्राणा यै: समर्पिता: ।
तेषां शाश्वत-सम्मान-रूपेयं शब्दयोजना ॥३५॥

स्वातन्त्र्य-यज्ञ की पूर्ति के लिए जिन्होने अपने प्राण समर्पित कर दिये उनके चिरस्थायी सम्मान के रूप में (मेरी) यह शब्द-योजना है।

इति कविरत्नश्रीब्रह्मानन्दशुक्लविरचिते 'श्रीनेहरुचरित'महाकाव्ये, प्रथम सर्ग समाप्त ।



# द्वितीयः सर्गः

शारदा यत्र रमते नानारूपवती शुभा ।
देशः सोऽयं विभातीह रम्यः 'कश्मीर'-संज्ञकः ॥१॥

जहां मङ्गलमयी सरस्वती अनेक रूपों को धारण करके विहार करती है, यह वही 'कश्मीर' नामक देश (प्रान्त) सुशोभित हो रहा है ।

यत्र केसर-सम्बद्धा भूमयः सुषमाभृतः ।
देव्य इव विराजन्ते पीतवस्त्रैः सुसज्जिताः ॥२॥

जहां केसर (की क्यारियों) से युक्त सुषमा-सम्पन्न भूमियां पीले वस्त्रों से सुसज्जित देवाङ्गनाओं की भांति सुशोभित होती हैं ।

यत्र मम्मट-रूपेण प्रादुर्भूता सरस्वती ।
यत्राभिनवसम्पद्भिरालोकश्च प्रसार्यते ॥३॥

जहां मम्मट के रूप में सरस्वती प्रादुर्भूत हुई एवं जहां अभिनव सम्पदाएँ (अथवा अभिनवगुप्त की रचनाएँ) आलोक (अथवा तन्त्रालोक) विकीर्ण करती हैं ।

कैयटष्टीकयामास यत्र भाष्यं पतञ्जलेः ।
चिरं मण्डनमिश्राणां यत्र भाति स्म भारती ॥४॥

जहां पतञ्जलि के महाभाष्य पर कैयट ने टीका लिखी थी (और) जहां मण्डनमिश्र की वाणी चिरकाल तक सुशोभित होती रही थी ।

यत्र कामस्य पूजार्थं सुन्दर्यः पुष्पपाणयः ।
नद्या नीरञ्च तीरञ्च सेवन्तेऽहर्निशं मुदा ॥५॥

जहाँ पुष्पों को हाथों में लिये हुए सुन्दरियाँ काम की पूजा के लिए नदी (नदियों) के नीर एवं तीर का प्रसन्नतापूर्वक रात-दिन सेवन करती हैं।

यत्र प्रसूनगन्धाढ्यः पवनोऽतिमनोरमः ।
हिमभारनतो, मन्ये, मन्दं वाति सदैव हि ॥६॥

जहाँ पुष्पों के गन्ध से सुगन्धित अत्यन्त मनोरम पवन, मैं समझता हूं, बर्फ के बोझ से दबा हुआ होने के कारण ही सदा मन्द-मन्द बहता है।

विख्याता वैष्णवी देवी भक्त-सिद्धि-प्रदायिनी ।
यत्र चामरनाथोऽपि राजते भगवान् भवः ॥७॥

जहां भक्तों को सफलता प्रदान करने वाली प्रख्यात वैष्णवी देवी (विराजमान) है और जहाँ भूतभावन भगवान् अमरनाथ भी सुशोभित होते हैं।

विविधैः फलभारैश्च विनता वनराजयः ।
हरन्त्य इव लक्ष्यन्ते नन्दनोपवन-श्रियम् ॥८॥

(जहाँ) नाना प्रकार के फलों के भार से लदी हुई वनों की कतारें नन्दन-वन की शोभा को हरती सी प्रतीत होती हैं।

अर्थ-काम-पराधीना अपि धर्मप्रिया जनाः ।
आश्चर्यचकितान्नित्यं कुर्वन्ति प्रेक्षकानहो ॥९॥

अर्थ-काम मे समासक्त होने पर भी (जहाँ के) धर्मपरायण व्यक्ति दर्शकों को आश्चर्यचकित करते रहते हैं।

नाना विहग-जातीनां कूजनं श्रवणप्रियम् ।
हरतीव मनो यत्र, यात्रा-कर्म प्रकुर्वताम् ॥१०॥

जहाँ विभिन्न प्रकार के पक्षियों का श्रुतिमधुर कलरव पर्यटकों के मन को हरता-सा रहता है।

शिव-दग्ध-वपु: कामो हिमानी-परिसेवया ।
कलया शान्तिकामोऽपि ध्रुवं यत्र विराजते ॥११॥

शिवजी के द्वारा दग्ध काम जहाँ की शीतलता का सेवन करके मानो केवल कलामात्र से शान्ति की इच्छा से (आज भी) जहाँ निश्चित रूप से रहता है।

'नेहरू'-संज्ञया लोके प्रसिद्धो द्विजजन्मनाम् ।
वंशो विख्यातिमापन्न: पण्डितोपाधिसम्मत: ॥१२॥

(जहाँ) पण्डितोचित उपाधियों से मण्डित 'नेहरू' इस संज्ञा से विभूषित ब्राह्मणों के (एक) वंश ने संसार में प्रसिद्धि पाई।

मुक्ताभिर्मणिभि: पूर्णे तत्र जात: प्रतापवान् ।
मोतीलालाभिध. श्रील: सौम्य: शील-समन्वित: ॥१३॥

मुक्ताओं एवं मणियों से परिपूर्ण उस वंश मे प्रतापी, लक्ष्मीवान्, *

सौम्य तथा शीलवान् मोतीलाल (नेहरू) उत्पन्न हुए।

पूर्वजानां तपोव्रातैः सञ्चितैः सुकृतैस्तथा ।
सरस्वत्या च लक्ष्म्या च परिपूर्णोऽभवत् सदा ॥१४॥

पूर्वजो के तप-पुञ्ज एव (अपने) सञ्चित पुण्यो से जो सरस्वती एव लक्ष्मी से सदैव परिपूर्ण रहते थे।

प्रत्यादेशोऽथ सर्वेषां वाक्कीलानामसौ बभौ ।
कुबेरमपि वित्तेशं श्रिया चान्वहसद् मुदा ॥१५॥

वे समस्त वकीलों के लिए 'प्रत्यादेश'-स्वरूप थे (उनके सामने कोई वकील नही ठहर सकता था) और धनपति कुबेर का भी अपनी लक्ष्मी से उपहास (सा) करते थे।

[अगले चार श्लोकों मे प्रयाग का वर्णन है —]

यत्र देवैर्हरेः प्रीतिमभिलक्ष्य कृतो मखः ।
'यज्ञवेदी'ति यं विज्ञाः कथयन्त्यतिपावनम् ॥१६॥

जहाँ देवताओं से भगवत्प्रीत्यर्थ यज्ञ किया था और बुधजन जिसे परमपवित्र 'यज्ञवेदी' के नाम से पुकारते हैं।

भरद्वाजमुनेर्यत्र विश्वविद्यालयो महान् ।
तपसा योग-शक्त्या च यस्मिन्नासन्विभूतयः ॥१७॥

जहाँ भरद्वाज मुनि का महान् विश्वविद्यालय था, जिसमे तपस्या एवं

